तेषु भास्वरदेहेषु पुण्याभिजनकर्मसु ।
समागतेषु देवेषु व्यगमत् तत् तमो नृप ॥ ३

नादृश्यत तदा यत्र यातनाः पापकर्मणाम् ।
नदीं वैतरणीं चैव कूटशाल्मलिना सह ॥ ४

लोहकुम्भीश्शिलाश्चैव मशकान् दंशकानपि ।
विकृतानि शरीराणि यानि तत्र समन्ततः ॥ ५

ददर्श राजा कौन्तेयस् तान् सर्वान् सुमहाप्रभान् ॥ ५॥

तत्र वायुस्सुखस्पर्शः पुण्यगन्धवहश्शुचिः ।
ववौ देवसमीपस्थश् शीतलो मृदुसम्मितः ॥ ६॥

मरुद्भिस्सह शक्रेण वसवस्तु महाग्निना ।
साध्या रुद्रास्तथाऽऽदित्या ये चान्येऽपि दिवौकसः ॥ ७॥

सर्वे तत्र समाजग्मुस् सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजास् स्थितो धर्मसुतोऽभवत् ॥ ८॥

ततश्शक्रस्सुरपतिश् श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वं हि मानयन् ॥ ९॥

इन्द्रः—

युधिष्ठिर महाबाहो प्रीता देवगणास्त्वया ।
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ॥ १०॥

सिद्धिः प्राप्ता त्वया राजँल्लोकाश्चाप्यक्षयास्तव ।

भ्रातॄणां सुहृदां चैव गतिर्निन्द्या सुपूजिता ॥ ११॥
अवश्यं नरकस्तात द्रष्टव्यस्सर्वराजभिः ।
न च मन्युस्त्वया कार्यस् शृणु चेदं वचः परम ॥ १२॥
शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ॥ १३
यः पूर्वं सुकृतं भुक्ते पश्चान्निरयमेति सः ।
पूर्वं निरयभाग् यश्च पश्चात् स्वर्गमुपैति सः ॥ १४
भूयिष्ठपापकर्मा यस् स पूर्वं स्वर्गमश्नुते ।
भूयिष्ठशुभकर्मा त्वम् अल्पं जिह्मं तवाच्युत ॥ १५
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ १६॥
व्याजेन हि त्वया द्रोण उपचीर्णस्सुतं प्रति ।
व्याजेनैव ततो राजन् दर्शितं नरकं तव ॥ १६॥
यथैव त्वं तथा भीमस् तथा पार्थो यमौ तथा ।
तथैव द्रौपदी कृष्णा व्याजेन नरकं गताः ॥ १७॥
आगच्छ नरशार्दूल मुक्तास्ते चापि किल्बिषात् ॥ १८
स्वपक्ष्याश्चैव ये तुभ्यं पार्थिवा निहता रणे ।
सर्वे स्वर्गमनुप्राप्तास् तान् पश्य च नरोत्तम ॥ १९
कर्णश्चैव महेष्वासस् सर्वास्त्रविदुषां वरः ।
स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥ २०
त्वं पश्य पुरुषव्याघ्रम् आदित्यतनयं विभो ।

स्वस्थो भव महाबाहो जहि शोकं ततो नृप ॥ २१
भ्रातॄन् पुत्रांस्तथा पश्य स्वपक्षांश्चैव पार्थिवान् ।
स्वं स्वं स्थानमनुप्राप्तान् व्येतु ते मानसो ज्वरः ॥ २२
अनुभूय पूर्वं तं कृच्छ्रम् इतः प्रभृति कौरव ।
विहरस्व मया सार्धं गतशोको निरामयः ॥ २३
कर्मणां तव पुण्यानां ज्ञानानां तपसां तथा ।
दानानां च महाभाग फलं प्राप्नुहि पाण्डव ॥ २४
अद्य त्वां देवगन्धर्वा दिव्याश्चाप्सरसो दिवि ।
उपसेवन्तु कल्याण्यो विरजोऽम्बरभूषणाः ॥ २५
राजसूयजिताँल्लोकान् अश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च फलं महत् ॥ २६
उपर्युपरि राज्ञां वै तव लोका युधिष्ठिर ।
हरिश्चन्द्रसमः पार्थ येषु त्वं विचरिष्यसि ॥ २७
मान्धाता यत्र राजर्षिर् यत्र राजा भगीरथः ।
दौष्यन्तिर्भरतो यत्र तत्र त्वं विहरिष्यसि ॥ २८
एषा पुण्या देवनदी पार्थ त्रैलोक्यपावनी ।
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ २९
अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति ।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ ३०

अध्यायः—पुटम्

---

॥ श्रीरस्तु ॥

## महाभारतस्य महाप्रस्थानिकपर्वस्थानां विषयाणाम्

# ॥ अक्षरमातृकाक्रमेण सूचनम् ॥



॥ श्रीरस्तु ॥

महाभारतस्य स्वर्गारोहणपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥

## ॥ निवेदनम् ॥

| | पुटे. | पङ्क्तौ. | |
|---|---|---|---|
| महाप्रस्थाने | २ | ९ | अर्धम् |
| | ७ | ९ | अर्धद्वयम् |
| | १४ | ६ | ,, |
| | १६ | १७ | ,, |
| स्वर्गारोहणे | ५ | १३ | अर्धचतुष्टयम् |
| | ८ | ९ | अर्धद्वयम् |

एतानि त्रयोदशार्धानि—अ-क-ख-घ कोशेषु नोपलभ्यन्ते। परं तु सन्दर्भे एतेषामावश्यकत्वात्—ग-कोशादुद्धृत्य संयोजितानीत्यवगन्तव्यम् ॥